दर्शन-परिषद्

# वाराणसेयसंस्कृतविश्वविद्यालयदर्शनपरिषदधिवेशनस्य

## उद्घाटनसमारोहे

म० म० पण्डितश्रीगोपीनाथकविराजमहाभागानां

# शुभारम्भाशीर्वचः

दिनाङ्कः २३-१२-६७

# शुभारम्भाशीर्वचः

नानादिग्देशेभ्यः समाहूतैः सुगृहीतनामधेयैस्तासु तासु विद्यासु निष्णातैर्बहुभिर्विद्वद्वरैः स्वलंकृता पुरतो विराजमाना महतीयं दर्शनपरिषद्। अत्र समागतेषु विद्वत्सु केचित् तत्त्वदर्शिनः, केचिद् ज्ञानरसिकाः, केचित्तु ज्ञानदर्शनसम्पत्त्यभावेऽपि केवलं विविदिषामात्रधन्याः स्युः, परन्तु सर्व एव महानुभावाः स्वसामर्थ्यानुसारेण विश्वकल्याणविधित्सवः सर्व एव स्वमतिमनुसृत्य स्वमार्गेण सत्यानुसन्धित्सव इति मे विश्वासः। एतेभ्यः सर्वेभ्यो मे साञ्जलिबन्धाः प्रणतयो विलसन्तु।

चिदानन्दरूपस्य परमसत्यस्य साक्षात्काराय द्विविधो लौकिको मार्गः पूर्वसूरिभिः प्रदर्शितः। एकस्तत्त्वविमर्शक्रमः, द्वितीयश्च रहस्योपासनक्रम इति। क्रमद्वयमन्योन्यसमाश्रितं भवति, कदाचिद् निरपेक्षं स्वतन्त्रमपि भवितुमर्हति। उभयत्रापि साक्षात्कार एव फलम्। सत्यस्वरूपं वस्तु परमार्थतो निर्विकल्पतया मलहीनमपि व्यवहारभूमौ तत्तद्विकल्पमात्रायाः संस्पर्शवशाद् व्युत्थितदर्शनानां मलिनवत् प्रतिभाति।

अनेनैव हेतुना विरोधभञ्जनार्थमविरोधप्रतिष्ठार्थं च समन्वयदृष्टिरेव यथासंभवं विधेया। सत्यस्य पूर्णं स्वरूपं विकल्पजालरहितं मनोवाचामगोचरमखण्डमद्वयमपि मनोभूमौ वाग्भूमौ च तत्तद्भावभेदेन विकल्पितमिव प्रतिभाति, सर्वथा स्वच्छमपि कलङ्कितमिव प्रतीयते।

वर्षसहस्रात् प्राक् कस्यचिद् भक्तप्रवरस्य मुखाद् भगवन्महिम्नो विवरणमिषाद् वचनमिदं स्फुरितम् "त्रयी सांख्यं योगः" इत्यादि। रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां मनुष्याणां सत्यस्वरूपस्य गम्यस्य एकत्वेऽपि व्यवहारभूमौ इन्द्रियमनसां सञ्चारक्षेत्रे प्रस्थानभेदोऽवश्यम्भावी, न केवलं भेदः, परन्तु कस्यचित् कुत्रचित् परत्वहितत्वादि-बुद्धिरपि स्वाभाविकी एव।

व्यवहारभूमौ तावद् दृष्टिसमन्वयस्यैतदेव बीजम्। यथाऽज्ञानदृष्ट्या कुत्रचिद् भेदावभासेऽपि वस्तुतस्तत्राभेद एव, तथा तात्त्विकदृष्ट्या भेदे सत्यपि लौकिकदृष्ट्या भेदाभासः संगच्छते। उभयोरेकवाक्यतापत्तिरेव समन्वयदृष्टेः फलम्। श्रीमच्छङ्करोक्तौ "सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्" इत्यत्र भेदाभावेऽपि यः पराभक्तिक्षेत्रे भेदप्रतिभासः स केषाञ्चिन्मते भेदकार्यनिर्वाहकत्वात् 'विशेषः' एव, न तु भेदः। अनयैव दृशा सर्वत्र समन्वयोऽनुसन्धेयः।

देशान्तरवद् अस्मद्देशेऽपि प्राचीनसमयादेव प्रावादुकानां दृष्टिभेदः प्रवृत्त आसीत्। इदं तु स्वाभाविकमेव। अनादिकर्मसंस्कारप्रभावेण प्रतिचित्तं तदितरस्माद् भावादिभेदेन

भिद्यते। तदनुसारेण तत् परमार्थसत्यं स्वदृष्टिभेदानुगुण्येन तेन तेन रूपेण पश्यति। तत्र कापि दृष्टिर्नात्यन्तं हेया, तस्याः स्वभावानुसारेण प्रसृतत्वात्। हेयत्वमुपादेयत्वञ्च नानाविधकारण-सम्पातेन जायते। बालस्य दृष्टेर्यूनो दृष्टिर्भिन्ना, युवकस्य दृष्टेर्वृद्धस्य च भिन्ना। तत्र कापि न हेया उपेक्षणीया वा।

अखिलेषु शास्त्रेषु सर्वत्रैव मतवैषम्यं दृश्यते। यावत्कालं गुणवैषम्यमयं जगत् स्थास्यति तावद् दृष्टिवैषम्यमपि स्थिरमेव मन्तव्यम्।

अत एव दर्शनशास्त्रेषु परतन्त्रसिद्धान्तं निराकृत्य स्वतन्त्रसिद्धान्तस्थापने उत्साहो लक्ष्यते। संशयनिरसनद्वारा स्वमतस्य पुष्ट्यर्थं च स्वविरुद्धमतान्तरव्युदासप्रयासः संगच्छते। प्राचीनकालादेव सरणिरियमनुसृता दृश्यते। उपासनादिमार्गस्थितानां स्वसिद्धान्ते श्रद्धाविवृद्ध्यर्थ-मेतत् सर्वं युक्तमेव। श्रद्धाभावे ज्ञानोदयस्यासंभवात् श्रद्धोत्पादाय स्वमतविरुद्धमतं निराकर-णीयमेव। तदिदमधिकारभेदरहस्यम्। सोपानपरम्परान्यायेन प्रज्ञाविवेकसम्पादनद्वारा सर्वा एव भूमयो विकल्पातिक्रमणे सामर्थ्यं पुष्णन्तीति सत्यम्, परन्तु सम्यग्ज्ञानाभावे क्रमसिद्ध-परम्पराप्राप्तं ज्ञानं न हृदयमधिरोहति।

अत एव धीविशुद्धये वादस्य महान् उपयोगो विद्यते। मतविशेषस्तु तादृशानुभवमूलक इति सत्यम्। अनुभवास्तावत् प्रगतिशालिनो योगिनस्तत्तत्स्थित्यनुसारेण निरन्तरं भिद्यन्ते। "नासौ मुनिर्यस्य मतं न भिन्नम्" इति स्मृतिरपि इह मुनीनां मतभेदे प्रमाणम्। एवं योगिनां देशकालाद्यनवच्छिन्ना दृष्टिस्तं तमवस्थाभेदमासाद्य बाधितापि वस्तुतो न बाधिता भवति। अक्रमज्ञानस्य तु चर्चापि नात्र विधीयते। तत्तु ज्ञानं सर्वथा विकल्पविरहितमन्तिमं भवति। मार्गे संचरणशीलस्य ज्ञानं तु क्रमेणैव सम्पद्यते।

अस्माभिर्बहोः कालात् परिषदादिषु गोष्ठीषु च तत्त्वविचारप्रसङ्गे पक्षद्वये विरोध एव प्राधान्येन लक्ष्यते, न त्वविरोधः। अविरोधस्तु निगूढत्वात् कदाचिदेव कुत्रचिदेव लक्ष्यते।

सर्वत्र दर्शनग्रन्थेऽपि विरुद्धमतस्य निराकरणं दृश्यते। तच्चावश्यकमेव।

आशास्यतेऽस्यां परिषदि सम्मिलितैर्विद्वद्भिरितः प्रभृति स्वसिद्धान्तपरिष्कृत्यर्थं परमतं युक्तिभिर्निरस्यापि समन्वयदृष्ट्या विरुद्धमतान्यपि समालोचनीयानि।

राष्ट्रनीतिक्षेत्रे व्यवहारक्षेत्रे समाजव्यवस्थाक्षेत्रे च सर्वत्रैव समन्वयदृष्टिर्विधेया। "अविरुद्धं विरुद्धेषु" इति यत् सात्त्विकज्ञानलक्षणमुक्तं तदपि विरोधसमन्वयमूलकमेव। परिच्छिन्नदृष्टि-मनुसृत्य तस्य तस्य मतस्य विचारः समीक्षकैः क्रियते, परन्तु तत्र सर्वापि दृष्टिर्विरोधमूलिकैव।

अस्मिन् संकष्टकाले भेदग्राहग्रस्ते जगति सर्वत्रैव स्वार्थरक्षार्थं स्वानुकूलसत्यप्रतिष्ठार्थं च समन्वयदृष्टिरपेक्षिता। श्रीमता भगवताप्युपदिष्टम्—कर्मण्यकर्मदर्शनम्, अकर्मणि च कर्मदर्शनं मनुष्यस्य बुद्धिमत्ताया निदर्शनमिति। सर्वं सर्वात्मकमिति वचनात् कर्मण्यकर्म यथा विद्यते तथाऽकर्मण्यपि कर्म विद्यते, परन्तु स्थूलदृष्ट्या तन्न दृश्यते। दर्शनमिदं साक्षात्कारात्मकमेव। अन्यत्रापि श्रीभगवता सर्वस्मिन् वस्तुनि स्वात्मनः स्वात्मनि च सर्वस्य वस्तुनो दर्शनमुपदिष्टं दृश्यते। एकस्मिन् विश्वदर्शनं यथा सत्यं तथा विश्वस्मिन् एकदर्शनमपि सत्यम्। भिन्नेष्वभिन्नदर्शनं तु विरोधनिवर्तकमेव।

अत एव आशास्यते यद् विद्वद्भिस्तत्त्वदृष्ट्या सर्वदर्शनानां समन्वये एव सावधानैर्भवितव्यमिति। युक्तिभिस्तत्सिद्धान्तपरिष्कारः, तत्तत्साधनप्रणालिकायाः प्रचारः, एतत् सर्वं तु यथापूर्वं कर्तव्यमेव, परन्तु साम्प्रतिकसमाजे धर्मादिप्रचारक्षेत्रेषु च परस्पर-विद्वेषमालिन्यादि-दोषपरिहाराय सर्वत्रैव शुभदृष्टेः प्रसारो विधेयः, यथा विरुद्धतया प्रतीयमानमपि मतमविरुद्धं प्रतीयेत। सर्वभूतेष्वात्मदर्शनं यथा प्रशस्यते तथा विरुद्धेष्वविरुद्धदर्शनमपि। स्वदृष्टिविकासेनैवैतत् संभवति। एतदर्थं विद्वद्भिः स्वदृष्टिप्रसारणाय स्वेतरशास्त्रेष्वपि श्रद्धापूर्णा दृष्टिर्विधेया, समन्वयदृष्ट्या च सर्वत्र समाधानं विधेयम्।

नेदं कार्यं स्वल्पकालेन साध्यमिति सत्यम्, परन्तु संभूयकरणे एकान्ततोऽसाध्यमपि नेति मे दृढः प्रत्ययः। एतेनेदं न शङ्कनीयं यद् विशेषजिज्ञासूनां विशेषज्ञाने समादरो न कृतः। सामान्यज्ञानं विशेषज्ञानं समन्वयज्ञानं चेति त्रिविधो ज्ञानसञ्चयः। तत्र यथा विशेषज्ञानस्य महत्त्वमस्ति तथा सामान्यज्ञानस्य समन्वयज्ञानस्य चापीति दिक्।

काशीपुराधीश्वरः श्रीविश्वनाथः समवेतानखिलान् विद्वज्जनान् आशीर्भिः संयोज्य अस्माकं सर्वेषां सम्यग् दृष्टिमुन्मीलयतु, यथा दर्शनपरिषदियं साफल्येन मण्डिता भवेत्।

